॥ श्रीराह्वष्टोत्तरशतनामावलिः ॥

राहु बीज मन्त्र -
ॐ भ्राँ भ्रीं भ्रौं सः राहवे नमः ॥

ॐ राहवे नमः ।
ॐ सैंहिकेयाय नमः ।
ॐ विधुन्तुदाय नमः ।
ॐ सुरशत्रवे नमः ।
ॐ तमसे नमः ।
ॐ फणिने नमः ।
ॐ गार्ग्यायनाय नमः ।
ॐ सुरापिने नमः ।
ॐ नीलजीमूतसङ्काशाय नमः ।
ॐ चतुर्भुजाय नमः । १०
ॐ खड्गखेटकधारिणे नमः ।
ॐ वरदायकहस्तकाय नमः ।
ॐ शूलायुधाय नमः ।
ॐ मेघवर्णाय नमः ।
ॐ कृष्णध्वजपताकावते नमः ।
ॐ दक्षिणाशामुखरताय नमः ।
ॐ तीक्ष्णदंष्ट्रकरालकाय नमः ।
ॐ शूर्पाकारासनस्थाय नमः ।
ॐ गोमेदाभरणप्रियाय नमः ।
ॐ माषप्रियाय नमः । २०
ॐ कश्यपर्षिनन्दनाय नमः ।
ॐ भुजगेश्वराय नमः ।
ॐ उल्कापातयित्रे नमः । उल्कापातजनये
ॐ शूलिने नमः ।
ॐ निधिपाय नमः ।
ॐ कृष्णसर्पराजे नमः ।
ॐ विषज्वालावृतास्याय अर्धशरीराय नमः ।
ॐ जाद्यसम्प्रदाय नमः । शात्रवप्रदाय
ॐ रवीन्दुभीकराय नमः ।
ॐ छायास्वरूपिणे नमः । ३०
ॐ कठिनाङ्गकाय नमः ।
ॐ द्विषच्चक्रच्छेदकाय नमः ।
ॐ करालास्याय नमः ।

ॐ भयङ्कराय नमः ।
ॐ क्रूरकर्मणे नमः ।
ॐ तमोरूपाय नमः ।
ॐ श्यामात्मने नमः ।
ॐ नीललोहिताय नमः ।
ॐ किरीटिणे नमः ।
ॐ नीलवसनाय नमः । ४०
ॐ शनिसमान्तवर्त्मगाय नमः ।
ॐ चाण्डालवर्णाय नमः ।
ॐ अश्व्यर्क्षभवाय नमः ।
ॐ मेषभवाय नमः ।
ॐ शनिवत्फलदाय नमः ।
ॐ शूराय नमः ।
ॐ अपसव्यगतये नमः ।
ॐ उपरागकराय नमः ।
ॐ सूर्यहिमांशुच्छविहारकाय नमः । सोमसूर्यच्छविविमर्दकाय
ॐ नीलपुष्पविहाराय नमः । ५०
ॐ ग्रहश्रेष्ठाय नमः ।
ॐ अष्टमग्रहाय नमः ।
ॐ कबन्धमात्रदेहाय नमः ।
ॐ यातुधानकुलोद्भवाय नमः ।
ॐ गोविन्दवरपात्राय नमः ।
ॐ देवजातिप्रविष्टकाय नमः ।
ॐ क्रूराय नमः ।
ॐ घोराय नमः ।
ॐ शनेर्मित्राय नमः ।
ॐ शुक्रमित्राय नमः । ६०
ॐ अगोचराय नमः ।
ॐ माने गङ्गास्नानदात्रे नमः ।
ॐ स्वगृहे प्रबलाढ्यकाय नमः । प्रबलाढ्यदाय
ॐ सद्गृहेऽन्यबलधृते नमः ।
ॐ चतुर्थे मातृनाशकाय नमः ।
ॐ चन्द्रयुक्ते चण्डालजन्मसूचकाय नमः ।
ॐ जन्मसिंहे नमः । सिंहजन्मने
ॐ राज्यदात्रे नमः ।
ॐ महाकायाय नमः ।
ॐ जन्मकर्त्रे नमः । ७०
ॐ विधुरिपवे नमः ।

ॐ मत्तको ज्ञानदाय नमः । मत्तगाज्ञानदायकाय
ॐ जन्मकन्याराज्यदात्रे नमः ।
ॐ जन्महानिदाय नमः ।
ॐ नवमे पितृहन्त्रे नमः ।
ॐ पञ्चमे शोकदायकाय नमः ।
ॐ द्यूने कलत्रहन्त्रे नमः ।
ॐ सप्तमे कलहप्रदाय नमः ।
ॐ षष्ठे वित्तदात्रे नमः ।
ॐ चतुर्थे वैरदायकाय नमः । ८०
ॐ नवमे पापदात्रे नमः ।
ॐ दशमे शोकदायकाय नमः ।
ॐ आदौ यशः प्रदात्रे नमः ।
ॐ अन्ते वैरप्रदायकाय नमः ।
ॐ कालात्मने नमः ।
ॐ गोचराचाराय नमः ।
ॐ धने ककुत्प्रदाय नमः ।
ॐ पञ्चमे धिशणाशृङ्गदाय नमः ।
ॐ स्वर्भानवे नमः ।
ॐ बलिने नमः । ९०
ॐ महासौख्यप्रदायिने नमः ।
ॐ चन्द्रवैरिणे नमः ।
ॐ शाश्वताय नमः ।
ॐ सुरशत्रवे नमः ।
ॐ पापग्रहाय नमः ।
ॐ शाम्भवाय नमः ।
ॐ पूज्यकाय नमः ।
ॐ पाटीरपूरणाय नमः ।
ॐ पैठीनसकुलोद्भवाय नमः ।
ॐ भक्तरक्षाय नमः । १००
ॐ राहुमूर्तये नमः ।
ॐ सर्वाभीष्टफलप्रदाय नमः ।
ॐ दीर्घाय नमः ।
ॐ कृष्णाय नमः ।
ॐ अतनवे नमः ।
ॐ विष्णुनेत्रारये नमः ।
ॐ देवाय नमः ।
ॐ दानवाय नमः ।

इति राहु अष्टोत्तरशतनामावलिः सम्पूर्णम् ॥